भो भो दुष्कर्मवर्गाः! परिहरत मदी-
याममिमामङ्गवल्लीं
ब्रूमः सौहार्दयोगात् परिचयजनिता-
न्नान्यथा यात शङ्काम् ।
हन्ता युष्मत्कुलानां दलितकुवलय-
श्यामलैः कोमलैस्तै-
र्गात्रैर्नेत्रोत्सवं नो वितरति भगवान्
भार्गवीभाग्यभूमा ॥ ४ ॥

यः ख्यातः पुरुषोत्तमस्त्रिजगति प्रज्ञाकवित्वादिभिः
पुत्र्यास्तस्य सुतस्तदीयतनयात् कौमारतन्त्राम्बुधेः ।
सुब्रह्मण्य इति त्रिलोकविदितादापीतशास्त्रामृतः
सोऽहं पूरितवानिदं प्रकरणं नाम्ना च नारायणः ॥५॥

कृष्णो विबुधाधिपतिर्निष्णातो वितरणेषु विद्यायाः ।
मुष्णातु हृदयतिमिरं पुष्णातु च मङ्गलानि सकलानि ॥ ६ ॥

कुमारिलवचोजालपयोधिशरदिन्दवे ।
शिष्यसन्तानसन्तानतरवे गुरवे नमः ॥ ७ ॥

सुब्रह्मण्यादधीताः क्षितिविबुधपतेः काशिकातर्कमार्गा
रामाचार्याच्च पश्चात् सकलमधिगतं येन कौमारतन्त्रम् ।
कृष्णात् काव्यार्थमीमांसकपरिवृढतः काव्यमार्गावगन्ता
सोऽहं नारायणाख्यो व्यलिखमखिललोकापहासार्थमेतत् ॥

इति श्रीनारायणप्रणीते मानमेयोदये
प्रमेयपरिच्छेदे अभावनिर्णयः ।

---

वेलालङ्घिपयःपयोधिविसरत्कल्लोलतुल्योदयै-
रालापाविषयैर्यशोभिरखिलं लोकं परिष्कुर्वते ।
लीलानिर्जितशात्रवाय च वयं तुभ्यं किमशास्महे
शैलाब्धीश्वर! मानवेदनृपते! जीयाः सहस्रं समाः ॥ ९ ॥

युष्मत्कीर्तिपयो नितान्तमहता युष्मत्प्रतापाग्निना
तप्तादण्डकटाहतोऽपि नितरामुत्सिच्यमानं मुहुः ।
नैवायाति विशांपते! विरलतां नैवोष्णभावं कदा-
प्यादत्ते नरवर्य! किञ्च नितरां माधुर्यमालम्बते ॥ १० ॥

त्रिभुवनकमल त्वदीयकीर्तिः
प्रचुरमरन्दविलासमादधाति ।
बुधसमितिरसौ तु चञ्चरीक-
प्रकरदशामपि तत्र मानवेद! ॥ ११ ॥

सम्पूर्णं चेदं मानमयोदयनाम

प्रकरणम् ।

शुभं भूयात् ।

—